इति श्रीभास्कराचार्यविरचिते सिद्धान्तशिरोमणौ
लीलावतीसंज्ञः पाट्यध्यायः संपूर्णः ।

---

बु०वि०—शिवः । तत्र परा निष्ठा यस्य स तथा । शिवे विष्णोरुत्कटभजनं काशीखण्डादौ प्रसिद्धम् । यद्वा स्मरहरस्य परा निष्ठा यस्मिन् स तथा । शिवस्य हृदये विष्णुर्विष्णोश्च हृदये शिवः । इति स्मृतेः । शिष्टाश्च ते शिष्याश्चोद्धवार्जुनादयः । तेषामशिवमज्ञानं तद्धन्तीति । तथा क्षितिपतिर्यदुस्तस्य ततिः संततिर्यादवाः । तैः पूज्यः । लब्धं लक्ष्म्याऽऽलयं यस्मिन् स तथा । पुनः कथं भूतः । उरुपूरुषः । पुरुषोत्तमः । अथ श्रीगुरुपक्षे । अयं क्षितौ प्रसिद्धः । केशवो गुरुर्वोऽशर्मशदज्ञानशातनोऽस्तु । कथंभूते भुवने । वदा वक्तारस्तेषु वरिष्ठः । न केवलं वक्ता किंतु वित्तं च विद्याश्च सतां विलासो यस्मिन् सः । तथा शिष्टाः साधवः । ते च शिष्याश्च यद्वा शिष्टाः शिष्टधर्मरता ये शिष्यास्तेषामशिवमज्ञानादि तत्घ्नन्तीति । तथा क्षितिपतीनां ततिः परम्परा तस्याः पूज्यः । लब्धो लक्ष्म्या रमया तन्नामधारकया ममाम्बया आलयो यस्मिन् स तथा । अत एवोरुपुरुषो महापुरुषः । गुरुः केशवोऽशर्मशदस्तु । इत्याशीः ॥

मया सदुपपत्तयः कतिचिदन्यदप्यत्र यत् ।
स्वधीलवविकासितं यदि सदोषमत्रास्ति यत् ।
तदीयपरिशोधनं सुजन सुज्ञवर्योचितं ॥
यतो दिनकरोदये क्व तमसो जनेऽवस्थितिः ॥ २ ॥

दृष्ट्वा केचिदिहोपपत्तिममलां तुष्यन्तु ये सज्जना
ये केचित्कविताविशेषरचनां व्याख्यादिकं केचन ।
केचिद्धि ब्रुवतेऽत्र किंचिदपि नापूर्वं वचोऽस्तीति ये
तुष्यन्तु स्वगिरैव तेऽपि निखिलं पश्यन्ति सन्तः समम् ।

बु०वि०– श्रीमत्सज्जनधामवृन्दरुचिरे क्षीराम्बुधेः प्राक्तटे ।
नन्दिग्राम इहावसन् द्विजवरः श्रीकेशवोऽस्याऽऽत्मजः ।
तत्पादाब्जयुगाप्तशास्त्रविभवः श्रीमद्गणेशः कृती ॥
नानायुक्तिमतीमिमां हि कृतवान् लीलावतीव्याकृतिम् ॥ ४ ॥
श्रीशालिवाहनशकेऽद्रिरसेन्दुतुल्ये १४६७
विश्वावसौ शरदि मासि मधौ सिताजे (द्ये) ।
लीलावतीसुविवृतिं कृतवान् गणेशः
श्रीकेशवेर्गणकवर्यकुलावतंसः ॥ २७२ ॥

इति श्रीसकलागमाचार्यवर्यश्रीकेशवदैवज्ञसुतश्रीगणेशदैवज्ञविरचिता
लीलावतीटीका बुद्धिविलासिनी समाप्ता ॥



## लीलावतीस्थश्लोकप्रतीकानामकारादिवर्णानुक्रमेण सूचिः।

## गणेशदैवज्ञकृतश्लोकप्रतीकानामकारादिवर्णानुक्रमेण सूचिः।



## लीलावतीस्थपद्यवृत्तानां सूचिः।

# शुद्धिपत्रम् ।

—.०:—

| पृ० | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२७ | ३ | एवं व्यस्रे | एवं त्र्यस्रे |
| १२८ | २ | कोटिश्रतिभ्यां | कोटिश्रुतिभ्यां |
| १३३ | ४ | देवा करणी | देवाकरणी |
| १४० | १ | वंशोद्धृतेस्तेन | वंशोद्धृतस्तेन |
| १४१ | १६ | चतुर्भुजकर्णयोः | भुजकर्णयोः |
| १४६ | २ | उडडीनमानं | उड्डीनमानं |
| १६० | ११ | इष्टा श्रति | इष्टा श्रुति |
| १७४ | ४ | निर्द | निर्दे |
| २२३ | ३ | वृक्ष्यमाण | वक्ष्यमाण |
| २२५ | १० | २९ | २१९ |
| २५१ | २२ | विविधखगाम | विविधखगागम |
| २६८ | २५ | दाशतः | दर्शितः |
| २८६ | ८ | निरगाच्छास्तो | निरगाच्छस्तो |